सा—रिरी—गगगा—ममममा—पपपपपा—
धधधधधधा—निनिनिनिनिनिनी— } इति ह्लसितः ॥ ५ ॥

सरिगा—गमपा—पधनी ॥ इति संधिप्रच्छादनः ॥ ६ ॥

सगा—मपा—पनी ॥ इति आक्षिप्तः ॥ ७ ॥

इत्यारोहिगताः सप्त ।

---

संचारिगास्त्रयोदश पूर्वः पूर्वः परस्य यदि भवति ।
आद्यन्तयोः प्रसादः स्यात्स प्रेङ्खः कला यस्य ॥ ६७ ॥

कुरुते गमनागमने द्विस्वरकाद्या कलास्तथैवान्याः ।
एकैकस्वरहान्या रञ्जित आदिमकलाद्यान्त्या ॥ ६८ ॥

द्विः प्रथमतृतीयद्वैतीयीकास्तद्वदुज्झितैकैकाः ।
आक्षेपे त्रिस्वरकाऽऽद्यकलाऽन्यकलाः परस्परग्रहणात् ॥ ६९ ॥

हित्वा पूर्वं पूर्वं समास्तयाऽथ परिवर्त आद्यकला ।
उक्ता द्वितीयमुक्ता त्रिस्वरका मुक्तमुक्ताद्याः ॥ ७० ॥

अन्यकलाः पूर्वसमा भवन्ति निष्कूजिते प्रसादस्य ।
सकलाः कलाः स्युराद्यात्तृतीयमेत्याद्यगानेन ॥ ७१ ॥

उद्वाहिते त्रयं प्राङ्मध्यगतश्चापराः कलास्त्यक्त्वा ।
पूर्वं पूर्वं तादृग्विधाः स्युरुद्घट्टिते त्वाद्यात् ॥ ७२ ॥

…त्वा स्वरद्वयं पञ्चमतश्चतुरःस्वरान्समवरोहेत् ।
…या कलैवमन्ये त्यागात्पूर्वस्य पूर्वस्य ॥ ७३ ॥

…आरे द्विस्वरका कलाऽऽदिमाऽन्त्यं विनाऽवरोहन्ती ।
…कोत्तरवृद्धस्वराः स्युरपराः कलास्तद्वत् ॥ ७४ ॥

…लिते चतुःस्वराद्या विपरीतान्तर्द्वया गतागतभृत् ।
…च्यमन्त्यत्यागाज्ज्ञेया इतराः कलास्तद्वत् ॥ ७५ ॥

…त्रिचतुःस्व…कलकाः प्रथमादिपुरःसराः क्रमे क्रमतः ।
…स्त्रिस्त्रः श्येनः संवादिद्वन्द्वतः क्रमतः ॥ ७६ ॥

…ह्रादमाने आद्यस्तृतीयकोऽथ द्वितीय आद्यश्च ।
…रुक्त्वैकैकं पुनरिति परमत एतेऽवरोहेऽपि ॥ ७७ ॥

सरिस—रिगरि—गमग—मपम—पधप—धनिध ॥ इति प्रसादः ॥ १ ॥

सरिरिस—रिगगरि—गममग—मपपम—पधधप—धनिनिध ॥ इति प्रेङ्खः ॥ २ ॥

सगरि, सगरिस—रिमग, रिमगरि—गपम, गपमग—
मधप, मधपम—पनिध, पनिधप ॥ } इति रञ्जितः ॥ ३ ॥

सरिगा—रिगमा—गमपा—मपधा—पधनी ॥ इति आक्षेपः ॥ ४ ॥

सगमा—रिमपा—गपधा—मधनी ॥ इति परिवर्तः ॥ ५ ॥

सरि, सगस—रिग, रिमरि—गम, गपग—
मप, मधम—पध, पनिप ॥ } इति कूजितः ॥ ६ ॥

सरिगरि—रिगमग—गमपम—मपधप—पधनिध ॥ इति उद्वाहितः ॥ ७ ॥

सरि, पमगरि—रिग, धपमग—गम, निधपम ॥ इति उद्घट्टितः ॥ ८ ॥

सरिस—सरिगरिस—सरिगमगरिस—
सरिगमपमगरिस—सरिगमपधपमगरिस—
सरिगमपधनिधपमगरिस ॥ } इति हुंकारः ॥ ९ ॥

सगरिम, मरिगस—रिमगप, पगमरि—
गपमध, धमपग—मधपनि, निपधम ॥ } इति स्खलितः ॥ १० ॥

सरि, सरिग, सरिगम—रिग, रिगम, रिगमप—
गम, गमप, गमपध—मप, मपध, मपधनि ॥ } इति क्रमः ॥ ११ ॥

सपा—रिधा—गनी—मसा ॥ इति श्येनः ॥ १२ ॥

सगरिस—रिमगरि—गपमग—मधपम—पनिधप ॥ इति ह्रादमानः ॥ १३ ॥

इति संचारिगास्त्रयोदश विधाः ।

---

द्वौ यावपरौ तत्र…ह्याद्यादष्टमस्वरावधिकम् ।
आद्यं यस्मिन्गायेत्ससतारमन्द्रप्रसन्नाख्यः ॥ ७८ ॥

आद्यत उत्क्रम्याष्टममवरोहः प्राक्तनस्य यत्र भवेत् ।
स्वरसप्तकस्य गदितः स मन्द्रतारप्रसन्नश्च ॥ ७९ ॥

संरिगमपधनिससं ॥ इति तारमन्द्रप्रसन्नः ॥ १ ॥

संसनिधपमगरिसं ॥ इति मन्द्रतारप्रसन्नः ॥ २ ॥

---

पूर्वैकैकत्यागात्तयोर्द्वितीयादिकाः कला ज्ञेयाः ।
त इति चतुस्त्रिंशदिह हि परं तु तेषामनन्तत्वम् ॥ ८० ॥

अलमेतेऽलंकारा रञ्जनलब्ध्यै स्वरावबोधाय ।
वर्णाङ्गव्यासाय च तदवश्यं पूर्वमभ्यस्याः ॥ ८१ ॥

स्वर आदिस्थो गीते ग्रहः प्रयोगबहुलोंऽश आदिष्टः ।
गीतिसमाप्तिविधायी न्यासः प्रतिरागमेते स्युः ॥ ८२ ॥

---

इति श्रीसोमनाथनिर्मिते रागविबोधे श्रुतिस्वरादेः
प्रथमो विवेकः समाप्तः ।

---

## द्वितीयो विवेकः ।

---

### वीणाः ।

---

रागविबोधनहेतोरिह मेला ये मयाभिधास्यन्ते ।
तदभिव्यक्तिनिदानं वीणाऽऽदौ वर्ण्यते रौद्री ॥ १ ॥

शंभुर्दण्डो गौरी तन्तुर्यस्या रमापतिः ककुभः ।
मा पत्रिका विरिञ्चिस्तुम्बं वागीश्वरी नाभिः ॥ २ ॥

महिपो दोरक इन्दुर्जीवोऽर्कः सारिकाश्च वीणा सा ।
अपि हरति दृष्टमात्रा देवमयत्वान्महापापम् ॥ ३ ॥

इति वीणांगानि ।

---

धर्मस्तयाश्वमेधे गानविधेर्ब्राह्मणाविति श्रुतितः ।
वीणाप्रियेण राज्ञार्प्यते द्रुतं वैणिकायार्थः ॥ ४ ॥

तस्माद्गायन्तमितिश्रुतेस्तया गायतः स्फुटः कामः ।
वीणावादनतत्त्वेति याज्ञवल्क्यस्मृतेर्मोक्षः ॥ ५ ॥

इति पुरुषार्थचतुष्टयसाधनमपि साधिका च सर्वाभ्यः ।
द्रुतकारिणी स्वरगतेः सारीभिर्मञ्जुलतमरवा ॥ ६ ॥

श्रुत्या स्मृत्या दृष्टां रुद्रेष्टां नारदादिभिर्जुष्टाम् ।
कलयन्त्वलयं वीणां सन्तः संतोषपोषार्थम् ॥ ७ ॥

इति वीणाप्रशंसा ।

---

सार्धैकादशमुष्टिर्दण्डः क्रियतेऽत्र तदुपरि च हित्वा ।
अङ्गुलपञ्चकमेकं रन्ध्रे तिर्यक्चलच्छिद्रः ॥ ८ ॥

ऊर्ध्वं तन्त्रीसुषिरवदपरं षष्ठेऽङ्गुले त्वचलशङ्कुः ।
तिर्यङ्मात्रं तस्मान्मेढक ऊर्ध्वोऽङ्गुलात्परतः ॥ ९ ॥

तुम्बं तदधोऽङ्गुलतोऽष्टाविंशत्यङ्गुलान्तरेणान्यत् ।
नाभिद्वयं सुवृत्तं सच्छिद्रं त्र्यङ्गुलोच्चततम् ॥ १० ॥

ककुभो द्व्यङ्गुलमुच्चश्चतुरङ्गुलदीर्घविपुलमसृणशिराः ।
वीणादण्डान्तर्गतदण्डोऽधः पक्ष उत्कीलः ॥ ११ ॥

मेरोरुच्चः किंचित्स्वदक्षिणतुरीयतन्त्रिकास्थाने ।
उच्चोच्चान्यत्त्रिच्छदः सचतुरयः पत्रमूर्धांशः ॥ १२ ॥

दृढवेणुजाणुर्जोऽथ सारिका मेरुककुभवद्विपुलाः ।
एकादशाङ्गुला लघुसारीदशकक्षमा पट्टी ॥ १३ ॥

तुम्बाग्रमनुगताग्रा बन्धार्थं दोरकादृढास्त्रिगुणाः ।
तुम्बादिबन्धनादि तु लोकात्स्याद्रुद्रवीणेति ॥ १४ ॥

इति रुद्रवीणालक्षणम् ।

---

उक्तात्र शुद्धमेलाथ मध्यमेलेति सा द्विविधा ।
पुनरेकैकं द्विविधा तत्राखिलरागमेलैका ॥ १५ ॥

अपरैकरागमेला तत्राऽऽद्या भेदयोरवान्तरयोः ।
स्थानत्रयेऽपि यत्राखिलरागार्हस्वराः सार्यः ॥ १६ ॥

सान्या यत्र यथार्हं रागव्यक्त्यै मुहुश्चलन्तीमाः ।
अथ शुद्धमेलवीणेह लक्ष्यमनु लक्ष्यते प्रथमा ॥ १७ ॥

इति वीणाविशेषाः ।

---

स्थाप्या मेरोरूर्ध्वं चतस्र इह तन्त्रिका मिथो विषमाः ।
दक्षिणपार्श्वे दण्डे तिस्रश्चतसृषु च वामाद्या ॥ १८ ॥

अनुमन्द्रषड्जसद्वैदनुमन्द्रे पं द्वितीयका तन्त्री ।
मन्द्रं सं च तृतीया चतुर्थिका मध्यमं मन्द्रम् ॥ १९ ॥

पार्श्वे तूपरिगाऽऽद्या मन्द्रं सं मध्यमा च मन्द्रं पम् ।
अन्त्या मध्यं षड्जं श्रुत्याख्यास्तिस्र एताः स्युः ॥ २० ॥

सति वा षड्जे श्रुतयो मन्द्रे मध्ये क्रमात्सकृद् द्विश्च ।
यद्वा षड्जे मन्द्रे मध्ये तारे तथा ताः स्युः ॥ २१ ॥

अनुमन्द्रषड्जतन्त्र्यां षट् सारीः स्थापयेद्यथा स्युरिमे ।
शुद्धरिशुद्धगसाधारणमृदुमशुचिमम्रदुपसंज्ञाः ॥ २२ ॥

अनुमन्द्रपस्य तन्त्र्यां स्युरिमे तास्वेव षट्सु सारीषु ।
शुद्धधशुद्धनिकैशिकिमृदुसशुचिसशुद्धरिषभाख्याः ॥ २३ ॥

शुद्धौ सरी इमौ न ग्राह्यौ तन्त्र्या तृतीयया जननात् ।
अनुमन्द्रसतन्त्रीवन्मन्द्रसतन्त्र्यां स्वरास्तेषु ॥ २४ ॥

त्याज्यौ शुद्धममृदुपाविमौ चतुर्थ्यां समुद्भवाद् भूयः ।
मन्द्रमतन्त्र्यां त्वित्थं सारीषु स्युः स्वरास्तासु ॥ २५ ॥

आद्याद्वितीययोः स्तो मृदुपोज्ज्वलपौ तृतीयिकां त्यक्त्वा ।
तुर्यायां शुद्धो धः शुद्धो निः स्याच्च पञ्चम्याम् ॥ २६ ॥

षष्ठ्यां च मृदुः षड्जः कैशिक्यर्थे परान्तरा सारी ।
मेरौ च प्रतिसारि स्वरस्थितिरियं प्रमाणं हि ॥ २७ ॥

इति शुद्धमेलवीणा ।

---

संवादिनां समाजो रञ्जनकारी भवेदिति न्यायात् ।
ध्वनितं निःशङ्कादिभिरिहापि संवादिसांनिध्यम् ॥ २८ ॥

सपसममुख्याः संवादिनः स्वरा एकसंश्रयाः प्रायः ।
श्रुतयो द्वादश वाऽष्टौ तेषामन्तर्यतः सन्ति ॥ २९ ॥

इति संवादित्वलक्षणम् ।

---

किं च स्वभुवः सपमा नियतश्रुतयोऽपि कल्पिता नो तु ।
वच्मि स्फुटमिह हेतुं सारीतन्त्र्योर्विना श्लेषम् ॥ ३० ॥

अपरस्तुरीयतन्त्र्यां द्वितीयसार्यूर्ध्वमनुरवोऽस्ति समः ।
तन्मन्द्रपः स्वयंभूर्मध्ये च समध्वनी स्वभुवौ ॥ ३१ ॥

अष्टम्येकादश्योः सार्योरूर्ध्वं समापरध्वनितः ।
तत्तैः समाः सपसमाः स्वयंभुवो मुक्ततन्त्रीजाः ॥ ३२ ॥

ये रिधरिम्निदुपमुख्यास्तन्मूलं स्थापिता यथाशास्त्रम् ।
तेऽपि स्वयंभुव इवाष्टम्यूर्ध्वं तिसृषु तन्त्रीषु ॥ ३३ ॥

पूर्ववदपराश्च रवात्पगपैस्तत्रोचितैः समात्क्रमतः ।
श्रुत्यैकयाऽधिकत्वं न्यूनत्वं वा न दोषाय ॥ ३४ ॥

अनुमन्द्रमन्द्रतारेष्विति स्थितिरपि स्वरस्वरूपविदाम् ।
स्वधिया मयेति गदितं तत्प्रामाण्यं निजानुभवात् ॥ ३५ ॥

इति स्वयंभुवः ।

---

अनुमन्द्रमन्द्रयोरिति ते द्वादश मेरुसारिकासूक्ताः ।
तन्मानतः स्वराणां सार्योऽत्र च मध्यताराणाम् ॥ ३६ ॥

स्थाप्याश्चतुर्दशान्येऽतितारषड्जार्थमपि परामाहुः ।
मध्यास्ताराश्च परं तेन ग्राह्यास्तुरीयतन्त्रीजाः ॥ ३७ ॥

अन्तरकाकल्यौ तीव्ररिधौ तीव्रतममध्यमश्चेति ।
पञ्च न किं द्वादशवत्सारीषूक्ता ब्रुवे तत्र ॥ ३८ ॥

साधरणादिसारीष्वपकर्षाद्धिक्रिता यदा श्रुतयः ।
पञ्च तदान्तरमुख्या इह स्युरिति ताः पृथङ् नोक्ताः ॥ ३९ ॥

केचन मध्यमतन्त्रीनिषादसार्यां प्रवेशतो ब्रुवते ।
कैशिकिकाकल्यावपि सार्यां मते तेषाम् ॥ ४० ॥

अत्रानुमन्द्रषड्जस्थाने [illegible]मध्यमोऽप्यस्ति ।
मध्यममृदुपौ तत्र ग्राह्यौ [illegible] पतन्त्र्यां ते ॥ ४१ ॥

ननु तनुवीणे तुल्ये गदिते [illegible]ऽत्र नादसंवादात् ।
मन्द्रादित्रयमर्हं तनुवत्तत्रानुमन्द्र इह ॥ ४२ ॥

नादोऽतिसूक्ष्मनामा नाभौ वदतीति शार्ङ्गदेवेन ।
सूचित इहानुमन्द्रो वीणार्होऽयं तदुक्तोऽत्र ॥ ४३ ॥

इति पुनरपि शुद्धमेलवीणा ।

---

अथ मध्यमेलवीणा लक्ष्यत इतरात्र चतसृषूर्ध्वासु ।
मेढकतस्तन्त्रीषु ज्ञेया त्वाद्यानुमन्द्रपगा ॥ ४४ ॥

मन्द्रसयुता द्वितीया तृतीयिका मन्द्रपञ्चमं दधती ।
तुर्या समध्यषड्जा तिस्रः श्रुतयस्तु पार्श्वस्थाः ॥ ४५ ॥

मन्द्रसमन्द्रपमध्यसयुक्ताः क्रमतः स्वरस्थितिः सैव ।
सारीषड्जे तेषु प्रामाण्यं पूर्ववर्त्कि तु ॥ ४६ ॥

पञ्चमतन्त्रीजसरी तदप्रयोज्यौ पुनः सतन्त्र्योर्यत् ।
तत्संख्याश्च न सार्योऽतितारगाः परमते शिष्टाः ॥ ४७ ॥

इयमपि भयुताऽन्यमते पञ्चमतन्त्रीषु पूर्ववच्छेषम् ।
त्याज्यौ मन्द्रसतन्त्र्याः शुद्धममृदुपौ मतन्त्र्यां यत् ॥ ४८ ॥

पूर्वास्तिस्रस्तन्त्रीर्विनात्र तन्त्र्यां तु मध्यषड्जस्य ।
त्रिस्थानस्वरसिद्ध्यै स्थाप्यन्ते सारिकाः कैश्चित् ॥ ४९ ॥

अतितारपञ्चमादा वामे पार्श्वे श्रुतिस्तु मन्द्रसयुक् ।
दक्षिणपार्श्वे मध्यसतारसयुक्ते श्रुती वास्याम् ॥ ५० ॥

तन्त्र्यां मध्यम एकेऽतितारमपि कृत्रिमोक्तितः प्राचाम् ।
किं त्वतिरोधे नादे न स्वरता रञ्जनाभावात् ॥ ५१ ॥

इति मध्यमेलवीणा ।

---

अन्येऽपि सन्ति भेदा अतिप्रसिद्धास्ततो नोक्ताः ।
सप्रामाण्यो भेदः परं त्वनुक्तोऽप्युपादेयः ॥ ५२ ॥

---

इति श्रीसोमनाथनिर्मिते रागविबोधे
द्वितीयो विवेकः समाप्तः ।

## तृतीयो विवेकः

---

### मेलाः

अथ कथ्यन्ते मेलाः क्रमरूपास्ते भवन्ति खरसाङ्काः ।
पञ्चदशभी रिगमधनिभेदैर्नियतश्रुतितया च ॥ १ ॥

तीव्ररितीव्रतररितीव्रतमरिसाधारणान्तरा मृदुमः ।
तीव्रतमगतीव्रतममम्रृदुपा धौ तीव्रतीव्रतरौ ॥ २ ॥

तीव्रतमधकैशिकिनौ काकल्यथ मृदुस इत्यमी क्रमतः ।
तीव्ररिमुखं त्रिभिद्रेर्भेदाः साधारणप्रमुखाः ॥ ३ ॥

गस्य मताश्चत्वारस्तीव्रतममुखौ मतौ मस्य ।
तीव्रधमुखाश्च धस्य त्रयस्त्रयः कैशिकिमुखा नेः ॥ ४ ॥

इति पञ्चदश रिगमधनिभेदाः ।

---

उक्ता मृदुमो गभिदा मृदुपो मभिदा च नेर्भिदा मृदुसः ।
पूर्वान्पञ्चदशभ्यः स्वरान्ब्रुवे भेदभेदकरान् ॥ ५ ॥

तीव्ररिमुखत्रयात्सः साधारणमुखचतुष्टयादृषभः ।
स्याद्गस्तीव्रतममममुखयुगलात्तीव्रधमुखत्रयतः ॥ ६ ॥

पूर्वं पञ्चम उक्तः कैशिक्यादेस्त्रि ाच्च धः शुचिवत् ।
एवं यथा तथैते भिद्भ्यः पूर्वं स्वरा नियताः ॥ ७ ॥

इति टीका ।

एकद्वित्रिचतुःपञ्चभिदास्तिथयोऽङ्ककरि च भूरसदृक् ।
गजगिरिगुणाश्च नृपदृक्क्रमतो मेला अभिधेन्दुः ॥ ८ ॥

इति मेलसंख्या ।

---

पञ्चदशैते भेदा एकाद्यङ्काभिधा ब्रुवेंऽशाङ्कान् ।
संख्याहेतूनेकाद्यद्व्याद्यप्रमुखमेलदिशः ॥ ९ ॥

एकभिदां पञ्चार्हा एकाङ्काः पञ्चदश ततो द्विभिदाम् ।
खयस्त्रिधा चतुर्धा इभा द्विधा षट् त्रिधा रामाः ॥ १० ॥

त्रिभिदां त्रिधाऽग्निबाणाः कुदृक् चतुर्धा नव द्विधा गदिताः।
त्रेधा चतुर्भिदां दृग् दिशश्चतुर्धा गजक्षितयः ॥ ११ ॥

पञ्चभिदां दृग्गिरयस्त्रिधेति यदि पूर्वसंख्योना ।
सस्थानैः स्वैरङ्कैस्तज्जनयेत्परपरांशाङ्कान् ॥ १२ ॥

इति मेलांशाङ्काः ।

---

एकश्चत्वारोऽष्टौ दश त्रयोदश च मूलपङ्क्तिः सा ।
न्यस्या प्रस्तारार्थं सैवैकैकाधिकाऽन्ते च ॥ १३ ॥

तिथ्यङ्कादा चाधोऽध उपान्त्ये सैकिताऽखिलाधःस्था ।
अग्रे मूलाङ्कवती पङ्क्तिरधः प्रागिवाधोऽधः ॥ १४ ॥

सैकोपान्त इति प्राग्वदुपान्त्ये द्वादशाङ्केऽधःस्था ।
अन्त्या तृतीय एकस्थाऽग्रे मूलाङ्कवत्येव ॥ १५ ॥

पूर्ववदखिलं भूयोऽधःस्थान्त्यतृतीयगे नवाङ्के तु ।
सैकान्त्यतुरीयेऽग्रे मूलाङ्कवती पुनः प्राग्वत् ॥ १६ ॥

सप्ताङ्केऽन्त्यात्तुर्येऽधःपङ्क्तिस्त्वन्त्यपञ्चमे सैका ।
शेषं पूर्ववदेवं प्रस्तारो द्व्यादिभेदानाम् ॥ १७ ॥

इति मेलप्रस्तारः ।

---

नष्टाङ्के स्वांशाङ्काः पात्या एकाद्यमुखदिशो लेख्या ।
पङ्क्तिः शेषभिद द्या मूलाख्या त्वन्यथैकाद्या ॥ १८ ॥

प्राच्यप्राच्यांशाङ्कैः शेषं शेषं सकृत्सकृद्ग्राज्यम् ।
दृष्टभिदोऽधोऽधःस्थैरप्रथमैर्लब्धयोग्यहैः ॥ १९ ॥

रक्ष्यं तथैव शेषं यथा तु तद्योगतोऽन्तिमे न भवेत्
समतोनता च पूर्वैणैकस्वरभेदताऽवसितौ ॥ २० ॥

क्रमतोऽन्त्यात्तुर्यादिषु लब्धं योज्यं चतुर्भिदादिभवैः ।
भागैऽशाङ्कैरन्ते च शेषपातं तथैकोनम् ॥ २१ ॥

इति नष्टः ।

---

यद्भेदाद्युद्दिष्टं तद्भेदाद्येव मूलमुल्लेख्यम् ।
एकाङ्कैर्यावद्भिर्मूलाद् वृद्धाभिदा अस्य ॥ २२ ॥

प्राच्यप्राच्यांशाङ्कास्तावन्तो नष्टवत्तु लभ्येरन् ।
शेषैः स्वांशाङ्कैः सह लब्धैक्ये सैकमुद्दिष्टम् ॥ २३ ॥

इति उद्दिष्टः ।

---

एकश्रुतिस्थभेदद्वयानिषुदिशस्त्यजेदिह तु मेलान् ।
क्रमसपुनरुक्तिकूटवदुक्तान्प्रस्तारसिद्ध्यर्थम् ॥ २४ ॥

इति त्यक्तमेलाः ।

---

संख्याप्रस्तारादि प्रोक्तमिति मया प्रसङ्गतः कुतुकात् ।
अनुपेक्ष्यं गुणगृह्यैः प्राचीनानुक्तमपि विबुधैः ॥ २५ ॥

इति ग्रन्थकर्तुः प्रार्थना ।

---

तेषु प्रसिद्धरागैर्विशेषितां विंशतिं ब्रुवे त्र्यधिकाम् ।
निर्भेद एक एकभिदौ द्वौ द्विभिदस्तु सप्तैव ॥ २६ ॥

चत्वारस्त्रिविभेदाश्चतुर्भिदोऽष्टौ च पञ्चभिद एकः ।
तत्तन्मेलेष्वधिकाधिकसंख्यास्तेऽथ रागांस्तान् ॥ २७ ॥

वच्मि मुखारी रेवादिगुप्तिरथ सामपूर्वकवराली ।
तोडीनादादिकरामक्रीभैरववसन्ताश्च ॥ २८ ॥

भैरव्याद्यवसन्ता मालवगौडोऽथ रीतिगौडश्च ।
आभीरनाटहम्मीरवराट्यः शुद्धरामक्रीः ॥ २९ ॥

श्रीरागः कल्याणः काम्बोदी मल्लवैरिसामन्तौ ।
कर्णाटो देशाक्षी शुद्धो नाटश्च सारङ्गः ॥ ३० ॥

इति रागा नामकरा मेलानां गुणदशामथ क्रमतः ।
तांस्तु मुखारीमेलप्रभृतीन्वक्ष्यामि लक्षणतः ॥ ३१ ॥

इति मेलानामुद्देशः ।

---

सन्ति मुखारीमेले शुद्धाः षड्जादयः स्वराः सप्त ।
स्यादेषाऽस्मान्मेलात्तुरुष्कतोड्यादिरागाश्च ॥ ३२ ॥

इति मुखारीमेलः ॥ १ ॥

---

मेलेऽथ रेवगुप्तेर्भवन्ति षट् सरिमपधनयः शुद्धाः ।
गोऽन्तरसंज्ञश्चास्माद्रागाः स्यू रेवगुप्त्याद्याः ॥ ३३ ॥

इति रेवगुप्तिमेलः ॥ २ ॥

---

सामवरालीमेले शुद्धाः सरिगमपधाश्च काकलिका ।
अस्मादियं वसन्तवराट्याद्याश्चापरे रागाः ॥ ३४ ॥

इति सामवरालीमेलः ॥ ३ ॥

---

तोडीमेले साधारणकैशिकिनौ च शुद्धसरिमपधाः ।
तोडीप्रमुखा रागा मेलात्प्रादुर्भवन्त्यस्मात् ॥ ३५ ॥

इति तोडीमेलः ॥ ४ ॥

---

नादादिमरामक्रीमेले साधारणश्च मृदुसः स्यात् ।
शुद्धा अपि सरिमपधा अस्मादेतन्मुखा रागाः ॥ ३६ ॥

इति नादरामक्रीमेलः ॥ ५ ॥

---

भैरवमेले शुद्धाः सरिमपधा अन्तरश्च कैशिकनिः ।
भैरवपौरविकाद्या रागा मेलादतस्तु स्युः ॥ ३७ ॥

इति भैरवमेलः ॥ ६ ॥

---

शुद्धा वसन्तमेले सरिमपधा अन्तरश्च काकलिका ।
अस्माद्वसन्तटक्कहिजेजाहिन्दोलमुख्याश्च ॥ ३८ ॥

इति वसन्तमेलः ॥ ७ ॥

---

मेले वसन्तभैरविकायाः शुद्धाः सरिमपधा मृदुमः ।
कैशिक्यपीयमस्मान्मारव्यथ मेलतोऽन्ये च ॥ ३९ ॥

इति वसन्तभैरवीमेलः ॥ ८ ॥

---

मालवगौडकमेले सरिमपधा एव पञ्च शुद्धाः स्युः ।
मृदुमध्यममृदुषड्जौ चास्मान्मेलाद्भवन्तीमे ॥ ४० ॥

मालवगौडो गौड्यौ पूर्वी पाडी च देवगान्धारः ।
गौडक्रिया कुरञ्जी बहुली रामक्रिया चापि ॥ ४१ ॥

पावक आसावरिका पञ्चमवङ्गालशुद्धललिताश्च ।
गुर्जरिकापरजाख्यौ विशुद्धगोडादिकाश्चान्ये ॥ ४२ ॥

इति मालवगौडमेलः ॥ ९ ॥

---

अथ रीतिगौडमेले पञ्च भवेयुः सरिगमपाः शुद्धाः ।
तीव्रतरधकैशिकिनौ चैतत्प्रमुखा भवन्त्यस्मात् ॥ ४३ ॥

इति रीतिगौडमेलः ॥ १० ॥

---

आभीरनाटमेले शुद्धसमपधाश्च तीव्रतररिषभः ।
साधारणमृदुसौ चेत्यतः स्युराभीरनाटाद्याः ॥ ४४ ॥

इति आभीरनाटमेलः ॥ ११ ॥

---

हम्मीरमेल उज्ज्वलसमपधतीव्रतररिमृदुममृदुसकाः ॥
हम्मीरविहङ्गडकेदारप्रमुखा अतो मेलात् ॥ ४५ ॥

इति हम्मीरमेलः ॥ १२ ॥

---

शुद्धवराटीमेले साधारणतीव्रतममृदुसाः स्युः ।
शुच्यथ सरिपधमस्माद्भवन्ति रागा वराट्याद्याः ॥ ४६ ॥

इति शुद्धवराटीमेलः ॥ १३ ॥

---

शुचिरामक्रीमेले मृदुमकतीव्रतममृदुसाः शुद्धम् ।
सरिपधमियमत्र ललितजैताश्रीत्रावणीदेश्यः ॥ ४७ ॥

इति शुद्धरामक्रीमेलः ॥ १४ ॥

---

श्रीरागमेलके रिस्तीव्रः साधारणोऽथ धस्तीव्रः ।
कैशिक्यपि शुचिसमपा मेलादस्माद्भवन्त्येते ॥ ४८ ॥
श्रीरागमालवश्रीधन्याश्यो भैरवी तथा धवला ।
सैन्धव्याद्याश्चान्ये देशविशेषैर्विभिन्नाख्याः ॥ ४९ ॥

इति श्रीरागमेलः ॥ १५ ॥

---

कल्याणस्य तु मेले शुचयः सपधा रिरस्ति तीव्रतरः ।
साधारणश्च मृदुपो मृदुसोऽस्मिन्नेव इतरे च ॥ ५० ॥

इति कल्याणमेलः ॥ १६ ॥

---

काम्बोदीमेले तीव्रतररिरन्तरकतीव्रतरधौ च ।
काकलिका शुचिसमपा अतश्च काम्बोददेवक्रि ॥ ५१ ॥

इति काम्बोदीमेलः ॥ १७ ॥

---

मल्लारिमेल उक्तास्तीव्रतररिमृदुमतीव्रतरधाश्च ।
मृदुसः शुद्धाः समपा अस्मादेते तु मल्लारिः ॥ ५२ ॥
नटयुक् स पूर्वगौडो भूपालीगोण्डशंकराभरणाः ।
नटनारायणनारायणगौडौ कोऽपि केदारः ॥ ५३ ॥
सालङ्कना टवेलावल्यावथ मध्यमादिरागश्च ।
सावेरी सौराष्ट्री जायन्तेऽन्येऽपि देशीस्थाः ॥ ५४ ॥

इति मल्लारिमेलः ॥ १८ ॥

---

सामन्तस्य हि मेले शुचिसमपास्तीव्रतमरिरन्तरकः ।
तीव्रतमधकाकल्यावसादेतन्मुखा रागाः ॥ ५५ ॥

इति सामन्तमेलः ॥ १९ ॥

---

कर्णाटगौडमेले शुचिसमपास्तीव्रतमरिमृदुमौ च ।
तीव्रधकैशिकिनौ स्युर्मेलादस्मादिमे रागाः ॥ ५६ ॥

कर्णाटगौडकोऽड्डाणो नागध्वनिविशुद्धवङ्गालौ ।
वर्णादिनाट इतरे तुरुष्कतोड्यादिकाश्च स्युः ॥ ५७ ॥

इति कर्णाटगौडमेलः ॥ २० ॥

---

देशाक्षीमेले शुचिसमपास्तीव्रतमरिस्तथा मृदुमः ।
तीव्रतरधमृदुसावत एषाऽन्ये चापि रागाः स्युः ॥ ५८ ॥

इति देशाक्षीमेलः ॥ २१ ॥

---

मेले ऽथ शुद्धनाट्याः शुचिसमपास्तीव्रतमरिमृदुमौ च ।
तीव्रतमधमृदुसमतो रागाः स्युः शुद्धनाटाद्याः ॥ ५९ ॥

इति शुद्धनाटमेलः ॥ २२ ॥

---

सारङ्गरागमेले तीव्रतररितीव्रतमगमृदुपाश्च ।
तीव्रतमधमृदुसौ शुचि सपमत एतन्मुखा रागाः ॥ ६० ॥

इति सारङ्गमेलः ॥ २३ ॥

---

इति श्रीसोमनाथनिर्मिते रागविबोधे तृतीयो
विवेकः समाप्तः ।

---

## चतुर्थो विवेकः ।

रागाः ।

स्वरवर्णभूषितो यो ध्वनिभेदो रञ्जकः स राग इह ।
बहुविधसंख्याः प्राचां मतैरनेकैः प्रसिद्धा ये ॥ १ ॥

इति रागः ।

---

देशजनुषोऽप्रसिद्धास्तेऽब्धितरङ्गा इव त्वसंख्याताः ।
शुद्धच्छायालगसंकीर्णतया त्रिविधताऽस्त्येषाम् ॥ २ ॥

शुद्धो रञ्जनकारी स्वेन च्छायालगः पराश्रयतः ।
संकीर्णस्तूभयथा मतमुदितमुमापतेरेवम् ॥ ३ ॥

इति रागाणां शुद्धादित्रिविधता ।

---

येऽत्रालापालप्तिप्रबन्धयोग्यास्त उत्तमाः कथिताः ।
अपि तादृक्षा येऽल्पप्रचारिणो मध्यमास्ते स्युः ॥ ४ ॥

अपि बहुतरप्रचारास्तदयोग्यास्तेऽधमा इति त्वन्ये ।
इति रागाणामुत्तमादित्रिविधता ।

---

यद्यपि देशीरागा देशे देशेऽन्यवेलाख्याः ॥ ५ ॥
पूर्णौडुवषाडवतास्वंशन्यासग्रहेषु चानियताः ।

तदपि ग्रहादि पूर्णत्वादि च बहुमतजमनुसृत्य ॥ ६ ॥
मेले प्रसङ्गत इहोद्दिष्टानां लक्षणं ससंक्षेपम् ।

तेषां पूर्वं वक्ष्यामि गानवेलासमायुक्तम् ॥ ७ ॥
इति देशीरागास्तेषां च त्रिविधता ।

---

पूर्णा नित्यं गेया सांशन्यासग्रहा मुखारीयम् ।
पूर्णा तुरुष्कतोडी गांशादिः संगवे कम्प्रा ॥ ८ ॥

इति मुखारी तुरुष्कतोडी च ।

---

असपा तु रेवगुप्ती रिन्यासांशग्रहा भवेत्सायम् ।
सततं सामवराली सांशन्यासग्रहा पूर्णा ॥ ९ ॥

इति रेवगुप्तिः सामवराली च ।

---

गांशग्रहा किल वसन्तवराली सर्वदाऽरिपा सान्ता ।
गाद्यंशसान्तपूर्णा तोडी कम्प्राऽणुसंगवरुक् ॥ १० ॥

इति वसन्तवराली तोडी च ।

---

सांशन्यासग्रहका पूर्णोल्लसति निशि नादरामक्रीः ।
धांशग्रहसन्यासः संपूर्णो भैरवः प्रातः ॥ ११ ॥

इति नादरामक्रीर्भैरवश्च ।

---

सन्यासग्रहमांशा स्वल्परिपा पौरवी लसेत्प्रातः ।
सांशन्यासग्रहको वसन्त उषसि विलसेत्पूर्णः ॥ १२ ॥

इति पौरवी वसन्तश्च ।

---

गेयः पूर्णष्टक्कः सांशन्यासग्रहो दिनस्यान्ते ।
मांशग्रहसन्यासोऽखिलो हिजेजस्तु सायाह्ने ॥ १३ ॥

इति टक्को हिजेजश्च ।

---

हिन्दोलो रिपहीनो मांशः सान्तग्रहः सदोषसि वा ।
पोना वसन्तभैरव्युषसि तु सांशग्रहन्यासा ॥ १४ ॥

इति हिन्दोलो वसन्तभैरवी च ।

---

रिधहीना शाश्वतिकी सान्ता गांशग्रहा तु मारविका ।
मालवगौडः पूर्णः प्रदोषशोभोऽथ वा रहितः ॥ १५ ॥

गान्धारधैवताभ्यां निन्यासांशग्रहोऽथ वा सान्तः ।
गौड्यधगा सायाह्ने धंशा चैती च सान्तादिः ॥ १६ ॥

इति मारविकामालवगौडगौडीचैत्यः ।

---

पूर्वी पूर्णा सान्ता गांशा षड्जग्रहा च सायाह्ने ।
पाडी सायाह्नार्हा गोना सांशग्रहन्यासा ॥ १७ ॥

इति पूर्वी पाडी च ।

---

रिग्रहपांशः सान्तः सदाऽगनिर्देवगान्धारः ।
गौडक्रिया धरिक्ता सांशन्यासग्रहा प्रातः ॥ १८ ॥

इति देवगान्धारो गौडक्रिया च ।

---

गेया सदा कुरञ्जी धाल्पा सांशग्रहा च सन्यासा ।
अमनिरपराह्णगेया सांशन्यासग्रहा बहुली ॥ १९ ॥

इति कुरञ्जी बहुली च ।

---

संपूर्णा रामक्रीः सांशान्तादिः सदाऽपि गांशाद्या ।
गाद्यो धांशः सान्तो निविरहितः पावकः शश्वत् ॥ २० ॥

इति रामक्रीः पावकश्च ।

---

आसावरी प्रगेया माद्यांशा सान्तिमा सदा पूर्णा ।
पञ्चम ऋषभविहीनः पांशन्यासग्रहो ह्युषसि ॥ २१ ॥

इत्यासावरी पञ्चमश्च ।

---

बङ्गालः शाश्वतिकः पूर्णः सांशग्रहश्च सन्यासः ।
उषसि तु पूर्णाऽपा वा सांशान्त्याद्या शुचिर्ललिता ॥ २२ ॥

इति बङ्गालः शुद्धललिता च ।

---

गुर्जरिका रिन्यासग्रहांशका पवियुता प्रभाताहा ।
परजो न्यल्पो गांशग्रहधगकम्प्रः सदा सान्तः ॥ २३ ॥
इति गुर्जरिका परजश्च ।

---

न्यल्पः प्रदोषशाली शुचिगौडः पांशसादिसन्यासः ।
पूर्णस्तु रीतिगौडो न्यंशान्त्यादिश्च सायाह्ने ॥ २४ ॥
इति शुद्धगौडरीतिगौडौ ।

---

आभीर्यपि प्रदोषे पूर्णा गांशग्रहा च सन्यासा ।
गग्रहपांशः सन्यासो हम्मीरोऽल्पनी रात्रौ ॥ २५ ॥
इत्याभीरीहम्मीरश्च ।

---

न्यंशग्रहसन्यासोऽल्पधो लसेन्निशि विहङ्डः कम्प्रः
केदारोऽल्परिधो निशि सन्यासो गांशगग्रहकः ॥ २६ ॥
इति विहङ्डकेदारौ ।

---

शुद्धवराटी पूर्णा सांशान्ता रिग्रहा च मध्याह्ने ।
सांशाद्यन्तोऽह्नोऽन्तः कम्प्रमनिर्देशकृत्पूर्णः ॥ २७ ॥
इति शुद्धवराटी देशकारश्च ।

---

ललित उषसि संपूर्णो धांशः सान्तग्रहः पहीनो वा ।
सन्यासग्रहगांशाऽल्परिधा प्रातस्तु जैताश्रीः ॥ २८ ॥
इति ललितो जैताश्रीश्च ।

---

सन्यासरिग्रहांशा संपूर्णा त्रावणी तु सायाह्ने ।
रिग्रहरिन्यासांशा साल्पा देशी सदा गेया ॥ २९ ॥
इति त्रावणी देशी च ।

---



यंशग्रहः प्रदोषे श्रीरागो गतधगो न वा सान्तः
सग्रहसांशन्यासा मालाश्रीर्निग्रहांशा वा ॥ ३० ॥

पूर्णाऽथ वा रिधाल्पा गेयाऽऽदौ मङ्गलाय शाश्वतिकी ।
धन्याशिका रिधोना सांशन्यासग्रहा प्रातः ॥ ३१ ॥
इति श्रीरागमालाश्रीधन्याशिकाः ।

---

भैरव्यंशन्यासग्रहसा रिपमुद्रिता सदा पूर्णा ।
नित्यं पमुद्रिताऽरिधसांशन्यासग्रहा धवला ॥ ३२ ॥
इति भैरवो धवला च ।

---

सैन्धव्यगनिर्नित्यं सांशन्यासग्रहा लसद्गमका ।
साद्यन्तगांशपूर्णः प्रदोषगेयश्च कल्याणः ॥ ३३ ॥
इति सैन्धवी कल्याणश्च ।

---

पूर्णा सादिरनिर्वा काम्बोद्यंशान्तसा च सायाह्ने ।
अपराह्ने देवक्रीः सांशन्यासग्रहाऽपा वा ॥ ३४ ॥
इति काम्बोदी देवक्रीश्च ।

---

मल्लारिर्नटयुगपि स धांशान्तादिरगनिश्च संगवभाः ।
सान्तादिगांशपूर्णो मध्याह्ने पूर्वगौडः स्यात् ॥ ३५ ॥
इति मल्लारिनटमल्लारिपूर्वगौडाः ।

---

सन्यासग्रहगांशा मनिहीनोषःस्वतेह भूपाली ।
न्यल्पो मध्याह्नार्हो धांशन्यासग्रहो गोण्डः ॥ ३६ ॥
इति भूपाली गोण्डश्च ।

---

पूर्णः सांशन्यासः सग्रह उपसीह शंकराभरणः ।
सान्तादिमांशपूर्णो नटनारायण इने नमति ॥ ३७ ॥

इति शंकराभरणो नटनारायणश्च ।

---

नारायणगौड उषसि गांशन्यासग्रहस्तथा गतरिः ॥
न्यंशन्यासग्रहकः पूर्णो निश्येव केदारः ॥ ३८ ॥

इति नारायणगौडो द्वितीयकेदारश्च ।

---

सालङ्कनाट आढ्यः सांशन्याशग्रहस्तु सायाह्ने ।
धांशान्तादिः पूर्णाऽरिपाऽपि वेलावली व्युष्टे ॥ ३९ ॥

इति सालङ्कनाटो वेलावली च ।

---

अरिधो मांशन्यासग्रहः प्रगे मध्यमादिरुद्गेयः ।
असपा धांशन्यासग्रहा प्रभाते तु सावेरी ॥ ४० ॥

इति मध्यमादिः सावेरी च ।

---

सौराष्ट्री संपूर्णा सांशन्यासग्रहा च सायाह्ने ।
सामन्तः सायाह्ने सांशन्यासग्रहः पूर्णः ॥ ४१ ॥

इति सौराष्ट्री सामन्तश्च ।

---

कर्णाटो निशि पूर्णो निन्यासांशग्रहः कचिद्रिधमुक् ।
पूर्णोऽड्डाणः पाद्यो धांशः सन्यास उल्लसेद्रावौ ॥ ४२ ॥

इति कर्णाटोऽड्डाणश्च ।

---

नागध्वनिरिह पूर्णः सांशन्यासग्रहः सदा गेयः
शुद्धबङ्गालः पूर्णो मांशन्यासग्रहो व्युष्टे ॥ ४३ ॥

इति नागध्वनिः शुद्धबङ्गालश्च ।

---

पूर्णोऽथ वर्णनाटः सांशन्यासग्रहो निशा गेयः ।
कम्प्रा तुरुष्कतोडी निशि मांशान्तग्रहा पूर्णा ॥ ४४ ॥

इति वर्णनाटस्तुरुष्कतोडी च ।

(इराख वा)

---

गांशन्यासग्रहकाऽऽरोहे तु गतमनिरुषसि देशाक्षी ।
नाटः शुचिः प्रदोषे सांशन्यासग्रहः पूर्णः ॥ ४५ ॥

इति देशाक्षी शुद्धनाटश्च ।

---

संपूर्णः सारङ्गः सांशन्यासग्रहोऽपराह्णरुचिः ।

इति सारङ्गः

---

लक्षणसमास एवं दृष्ट्वा नानामतान्युक्तः ॥ ४६ ॥

मेलग्रहादिपूर्णत्वाधैक्येऽप्येषु वादनभिदा भित् ।
वर्ज्यस्वरोऽवरोहे द्रुतगीतो नेह रक्तिहरः ॥ ४७ ॥

इति श्रीसोमनाथनिर्मिते रागविबोधे ।

चतुर्थो विवेकः समाप्तः ॥

---

## पञ्चमो विवेकः ।

---

### रागरूपाणि

तेष्विति मेलक्रमतः समासतो लक्षितेष्वहं कतिचित् ।
तानुद्दिशामि कालक्रमतो व्यासेन लक्षयितुम् ॥ १ ॥

शंकरभूषणवेलावल्यौ भूपालिका शुचिर्ललिता ।
सवसन्तो हिन्दोलो विभासललितश्च जैताश्रीः ॥ २ ॥

धंन्याशीभैरवपौरविकास्तोडी तुरुष्कतोड्यन्या ।
भल्लारिर्नटपूर्वः स च गोण्डः पूर्वगौडश्च ॥ ३ ॥

देशीकारः शुद्धवराटी वहुली ततश्च सारङ्गः ।
नटनारायणदेवक्रियौ च सौराष्ट्रिका गौडी ॥ ४ ॥

चैत्तीपूर्वीत्रावणि काम्बोदी शुद्धनाट आभीरी ।
कल्याणः श्रीरागो मालवगौडोऽथ गौडश्च ॥ ५ ॥

कर्णाटाड्डाणौ वर्णनाटहम्मीरकौ च केदारः ।
सविहङ्गड इत्युष आद्यष्टसु कालेषु गातव्याः ॥ ६ ॥

इति कालक्रमतो रागाणामुद्देशः ।

---

शंकरभूषाद्या उषसि हि जैताश्रीमुखास्ततः प्रातः ।
संगव इह तोड्याद्या मध्याह्ने गोण्डकप्रमुखाः ॥ ७ ॥

अपराह्ले बहुलीतः प्रभृति च सायाह्नके तु सौराष्ट्र्याः ।
शुचिनाटतः प्रदोषे निशि कर्णाटात्सदा त्वेते ॥ ८ ॥

मालाश्रीर्धवलाऽथ मुखारी रामक्रिया सपावकका ।
सैन्धव्यासावरिका गान्धारो मारवी परजः ॥ ९ ॥

निजनिजकालेऽप्येते क्रमतो गेया अथ क्रमाद्विविधैः ।
आर्याच्छन्दोवद्धैर्लक्षय एतान्परं रूपैः ॥ १० ॥

इति रागाणां कालाः ।

---

सुस्वरवर्णविशेषं रूपं रागस्य बोधकं द्वेधा ।
नादात्म च देवमयं तत्क्रमतोऽनेकमेकं च ॥ ११ ॥

इति रूपस्य समान्यलक्षणम् ।

---

तत्र विविच्यत आद्यं लोकव्यवहारविश्रुतं पूर्वम् ।
अपि यस्य कस्यचिद्यत्पर्यायः स्वरसमूहस्य ॥ १२ ॥

आलापमूर्च्छनाश्रुतितानालंकारकूटतानाद्याः ।
तत्संकराश्च रूपैरग्रे ज्ञेयाः कश्चित्केऽपि ॥ १३ ॥

इति नादात्मरूपविशेषः ।

---

वादनभिदास्वनन्तास्वभिधास्ये विंशतिं स्फुटं देश्याम्
स्थाने च द्वे द्वाविंशत्या नाम्नां प्रकल्पितया ॥ १४ ॥

प्रत्यान्वपूर्वहतयः पीडादोलनविकर्षगमकानि ।
कम्पो घर्षणमुद्रे स्पर्शौ नैम्न्यप्लुतिद्रुतयः ॥ १५ ॥

परतोच्चताऽथ निजते शमसृदुकठिनानि विंशतिर्द्व्यधिका ।
वादनभेदपदानां वीणायां लक्षणं क्रमतः ॥ १६ ॥

इति वादनभेदानामुद्देशः ।

---

प्रतिहतिरन्तर्द्रुतमुच्छलनवतो हतियुगाद्गभीररवः ।
आहतिरन्यध्वनने हतिं विनाऽन्यस्वराश्रावः ॥ १७ ॥

इति प्रतिहतिराहतिश्च ।

---

अनुहतिरेकहतेः प्रतिहतिवत्सैव त्वहतिरघातात्स्यात् ।
पीडाऽऽपीड्य विमुक्तिर्दोलनमाकर्षणागमने ॥ १८ ॥

इत्यनुहत्यहति पीडादोलनानि ।

---

आकर्षणं विकर्षो दोलनमेव हि पुनः पुनर्यमकम् ।
स्पष्टः कम्पो घर्षणमेकहतिर्द्राक्स्वरान्तरकृत् ॥ १९ ॥

इति विकर्षगमककम्पघर्षणानि ।

---

मुद्रा परैकहननान्प्रदर्श्य पूर्वं पुनस्तदाच्छादः ।
आहतिरेव स्पर्शो द्रुतमुक्ता दृढहतिर्नैम्न्यम् ॥२० ॥

इति मुद्रा स्पर्शो नैम्न्यं च ।

---

प्लुतिरग्रस्वरघर्षो द्रुतिस्स्वरावादनं ततः परता ।
पूर्वेऽग्र्यस्याकर्षणमथोच्चता तत्तृतीयस्य ॥ २१ ॥

इति प्लुतिद्रुतिपरतोच्चताः ।

---

निजते तु तयोः पौर्व्यं क्वापि सघाते शमो विलम्बः स्यात् ।
मृद्विह मन्द्रं स्थानं कठिनं तारमथ संकेताः ॥ २२ ॥

इति निजते शमो मृदु कठिनं च ।

---

प्रत्यान्वपूर्वकहतिषु बिन्दू बिन्दुः स रेखया द्विगुणः ।।
सोऽधः सोऽग्रे शुद्धः पीडायां दोलने तु गुरः ॥ २३ ॥

ऊर्ध्वे उपरि स च तिर्यग्विकर्षे ऊर्ध्वे स गमक ऊर्ध्वोऽग्रे ।
कम्पे रेखोर्ध्वोर्ध्वे तिर्यक्सा घर्षणे शिरसि ॥ २४ ॥

नैम्न्ये सोऽधः सोऽग्रे प्लुत्यां स्वरशृङ्खला द्रुत्याम् ॥ २५ ॥

परतायां तु गुरुरधःस्थायी तिर्यक्स उच्चतायां तु ।
ऊर्ध्वाधोऽथ निजतयोः परतायां उच्चतायां वा ॥ २६ ॥

लम्बोर्ध्वबिन्दु चिह्नं लम्बो बिन्दुः शमे भवेत्पुरतः ।
उपरि स तूर्ध्वो मृद्विनि च कठिने तिर्यक्स ऊर्ध्वे स्यात् ॥ २७ ॥

इति संकेतेष्वेको द्वौ बहवो वा स्वरे स्युरेकस्मिन् ।
यत्रैकवादनं द्विस्तत्संकेतोऽपि तत्र द्विः ॥ २८ ॥

लम्बेन बिन्दुनोनाः शीर्षे मध्यस्वरा इह ज्ञेयाः ।
प्रारब्धरूपपूर्तौ पद्माकारश्च संकेतः ॥ २९ ॥

यथा—स । स । स । स । स॰ । स । स । सऽ । स । स । स ।

स । स । स । सरिग । स । स । स । स । स० । स । स । स ॥

इति त्रयोविंशति संकेताः ।

---

निजनिजमेले शुद्धास्तीव्रयाद्याश्च ये यथैव स्युः ।
सरिगमपधनीति पदैर्ज्ञेयास्ते लाघवायोक्तैः ॥ ३० ॥

इति शुद्धविकृतस्वराणां ज्ञापकचिह्नम् ।

---

रूपगसादिषु सह्यं सूत्रत्वादिह विभक्तिराहित्यम् ।
वादनसिद्ध्यै रचितं मयेति पूर्वैरनुक्तमपि ॥ ३१ ॥

इति पुनरपि ग्रन्थकर्तुः प्रार्थना ।

---

मध्यमिकाग्रोद्धरतः क्रमाज्जठरपृष्ठतश्च तर्जन्याः ।
वाद्योर्ध्वतन्त्र्यपि सह श्रुत्या पृष्ट्या कनिष्ठायाः ॥ ३२ ॥

स्थायादिष्विति नियतं यथेष्टमन्यत्र मध्यमोपजयोः ।
उदराभ्यां पृष्ठिभ्यां चतुर्द्रुतहतिस्तु कर्तव्याम् ॥ ३३ ॥

दक्षिणकरप्रचारो गदितो विस्तरभयादियानेव ।

इति दक्षिणकर प्रचारः ।

———

अथ सव्यहस्तकृत्यं कथयाम्यूर्ध्वासु तन्त्रीषु ॥ ३४ ॥

मध्यमया चारोहः स्थाप्या पूर्वं च तर्जनी तूष्णीम् ।
उक्तभिदां सिद्ध्यै प्रायस्तर्जन्याऽवरोहस्तु ॥ ३५ ॥

काप्यारोहोऽपि तया ह्यङ्गुलिचालश्च शुद्धनाटादौ ।
मन्द्रानुमन्द्रयोः स्यात्परिभाषा वादनस्येति ॥ ३६ ॥

इति सव्यहस्तकृत्यम् ।

———

अथ शंकराभरण इति

समगमरिग०रिस०० समगमरिग० गरिग ।

मप०सि ध [illegible] सिधंपमगम-

रिग०[illegible]गमप०सिधंपमगमरि ॥ ३७ ॥

ग०ग रि [illegible] ध०धंधपमगम-

रि ग०ग रिग०मपमंपगमम रिग०रिपग ।

म रि ग०सम रिग०रिस रि सरि०-

गरि स निस ध निस ध० पम० ध नि स ॥ ३८ ॥

ध निस॰ससरिगममप धं निसि-

रि रिसनिसध०पमगमरिग०रिस॰ ।

सरिगमपधनि सरि स धनि-

सरि सनिधनि सरिस निस धनिस ॥ ३९ ॥

रिसनिसधपमगमरिगम-

रिसनिसधनिसरिसनिसधनिसरि सनि ।

सधनिस॰ सन्त्यपराणि

प्रदर्शितं तदपि दिङ्मात्रम् ॥ ४० ॥

(२) वेलावली सरिग०धप०-

धधपमग०रिस॰स०रि ग प०म ग प०म ग म० ।

गरि०स॰स०रिग०प०म गप०ध स०-

निस०निधनिध०ध सनिध०पग०रिस॰ ॥ ४१ ॥

स०रिगप०मपध०पधप०म ग-

रिग०रिसस॰ससरिमपप०धधनिनिधप० ।

मग०रिस॰सरिग०धप धधप-

मगरिगग रि०स रिरिगग रिरि स॰ ॥ ४२ ॥

स गुगरिसरि० ध०स०स०निधप०-

धप स०स० (३) भूपालिका स०रिग ।

प०ध० स० स सधु ध प०पपग०ग-

रिरिरिगुगरिरि स स०सरिसध प० ॥ ४३ ॥

धु स०रिसुरिग००गपधु स सरि-

रि स रि ग ०रि स रि स ध ध प०पपधु प ग ग ।

रि०रिगु गरि रि ससरि ग गरि-

रि स स ग प गपध सधस रिस रि ॥ ४४ ॥

सगरिस (४) ललिता सरिगम-

पगरिगरि स नि० सरिगपमग रिगरिस ।

गमपगमधुनिस रिनिधम-

ग रिरिसनि० सरिगरिगपम० रिस ॥ ४५ ॥

(५) एष वसन्तः स०रिग०म०

धप०मप०मगमधमधनिधधनि स स०स ।

स म ग ग रिसनिस०निधमध-

मधनिध०ध नि स सस० निधप०मप० ॥ ४६ ॥

मगम०मग गरिसस निधप-

मप०मगम०धप० मप० मग०म० मग गरिस * ।

(६) हिन्दोलः सग सगम ध-

मधनिस० ग स ग निस ग०स निधध० ॥ ४७ ॥

मध मध निधधनि स०सनिध-

निध०मग०मग०स* स निधनिध०मग०मग०स * ।

सस गग मम धधनिनिस० स०-

निधनिध०मग० मग०स० गसगनि० स ॥ ४८ ॥

(७) ललितो विभासभेदो

ग०पधस० ग रिनिध०मग०रिस* ग०पधस० स ।

नि ध०म ग०रि स* स रि ग० सनि ध०-

ध धु नि सरिगग० ममगमगरि०ग ॥ ४९ ॥

ममगरिस* गम०ध० नि ध०निनि-

धपमग०रिस०स रि ग० सनि ध० धमनि ध म ।

ग रि स नि ध०ध धु नि सरिगग०-

ममगमगरि०गम ध० म ग ग०रि स* ॥ ५० ॥

इत्युषसि गातव्याः सप्त रागाः ।

---

(१) जैताश्रीः सगरि स०गप०-

म म ग०रिस०पम०पग०रिस० पमगरि स०म ।

गरि स० ग०रिस* गगमपनिस०-

ग०रिस०नि०स स निधप०म०सनिधस ॥ ५१ ॥

निधप० म ०निधप० म ०गम०निध-

प०म गरिस*धनि०सगगम० गरिस* सगम ।

प० प प म० म प० प०म ग०रि स०स*-

ग०मपनि०ग० रिस० निस सनिधप०म ॥ ५२ ॥

गग०रिस० पनि०स* (२) धनाश्री-

गम पपु मगस० पपु अग स०सप० मप०पु ।

मगस* गसगमपनिपनिस-

सनिपमगस*गगमप०मपनिप ॥ ५३ ॥

नि सगु सनिपमगस* सगस-

गमपम पनिपनि स०ग स सनिसनि ग स ।

नि स गस निग सनिधस-

निपनिपसनिपमगमगपमगप ॥ ५४ ॥

मगपमगमगसप०पग०स-

ग सगस ग सनिप म ग सप० मपमपम ।

पमपमपनिपनि सग स ग-

स ग स गसगसनि प मगससप०* ॥ ५५ ॥

ग म प निसप०निस०ग म प म-

ग०रि सग रिनि०स०प०निसप०सनिपमगम ।

पमग०रिस*सपमपगमप-

मग०रिस०गरिनि०स०स०ग०निनिप०स* ॥ ५६ ॥

(३) भैरव एष ध० निसनि रि०-

स० ध० नि स०ध प म० म ध० निस०म ग० रि०स*सग० ।

मप मप ध०मपमग०रिरि०स*-

मधनिसि नि रि स स ध नि स ध म० प ॥ ५७ ॥

म ग ०मसध०पम० म ग ०मपम-

धपध मपम ध प म प म ग ० रि०स* ध ध०नि ।

स० म ग रिस निध धान० स रि ग-

रि स निधधनि स रिसनि सनि ध ध ॥ ५८ ॥

पम०म ग० मपध०मम ग० रि ०स*-

(४) पौरविकाऽथ सरि०मग रि ससरिस०नि ।

सगमगम०निधप ग म०मग-

मगरिस* सरिमगरि ससगमग ॥ ५९ ॥

म०म स स नि ध०प मम गम०ग-

रिस*सरिमगरि स सगमगम० म स सनि ।

ध धनि स नि ध०धधलनिध नि-

धम ग गगपमगमगरि स*सरि ॥ ६० ॥

स०गम०गरिगरिपपप म०ग-

रिस*स०गमप०निधप प०म०गरिस०ग०रिस* ।

इति प्रातर्गातव्याश्चत्वारो रागाः ।

---

(१) तोडी तु ग०रि ग०रिस०सरि-

पम०ग०रिग०रिस०*सरि ग मपमनि ॥ ६१ ॥

निध प०मग०रिस* ग०रिग०रिस०-

नि०धनि० गरिस* सरि गम निधप०मग०रिस* ।

सरि ग सनि ध० धधनिसरिग-

गरि ग प निधप म ग रिग रि ग०स*रि० ॥ ६२ ॥

ग म निधपमग रिग०स*ध नि-

स० गरिसिनिधधनि स०रिनिधपमग०रि०स* ।

(२) पश्चात्तुरुष्कतोड्ये-

पा ग०रि सरि०स निस० निधनि०सनि० ॥ ६३ ॥

गरि०स* सरिगमप०म०निध०प०-

मपप०मग०रि०स नि स*पमगगरिसनि स* ।

सनि०ध०प०म०ग०रि०स नि ०स* सरि-

गमप०म०सनिनिधधपपमम ग ॥ ६४ ॥

गरि रिस सनिधनिसगरिरि-

सस*सरिगमप०मसनिध पपमगरि०सग ।

(३) मल्लारि ध सरि० प०पमरि०-

स*धसधसरि०मरिमपध०मपध० ॥ ६५ ॥

स०धरिस धप म रि सधपम-

पध०मपध०स*धसधसरिमपध०मपध० ।

पध०स०धरि स ध प मरि० ध०प-

धप धप धप धप धप मरिमप ॥ ६६ ॥

ध०मपध० स० ध ।र स ध प म रि-

सध०स*धध०सरि प म ध स स स नि नि नि नि ।

धपमपपमगगगरि०म प-

ध रि स स नि नि नि निधपमपम ग ॥ ६७ ॥

ग ग ग रि०म प ध नि धमपप-

म ग ग ग ग रि०मप रि प ग ग ग ग रि० सरि० ।

स०स ध प धमप ध रि स निध०-

स स*(४)मल्लारिर्नटादिस्तु ॥ ६८ ॥

सरि०पम०गरि० स*सरि०पम०ग-

रि०मपध० रि रि स० ध०प००म०प० ध० पमगमप० ।

प०मम० ग रि० स०रि०ध०सरि०स*-

सरि०पम० ग रि रि०म०मैप ध०० स ०निध प ॥ ६९ ॥

म०मप ध०० रि रि स० ध ०प०० म प ध०

पमगमप०पपम० ग रि० स ॐ पपपपमरि ।

ग रि म प० मप० म ग ग रि स०स॰-

रिमपधप०मप०मग रि सरि० ध०स० ॥ ७० ॥

प ध० म प ध०रिसरि० ध०ध धुस॰-

इति संगवे गातव्याश्चत्वारो रागाः ।

---

(१) गोण्डस्तु रि०प म० पध०धपधनिपम०ग ।

रि० धसरि प मगरि०धसरिप-

मगरि स०सरि ग रि० स* मपध० स स ॥ ७१ ॥

नि सं रि ग रि०स०ध०रि० स०निधप०-

म प ध रि स०निधप० म पधस०निधप० म० प ।

ध०धपधनि प म ०गरि० धसरि-

पम०गरि स०सरि ग रि०स०धरि०स ध ॥ ७२ ॥

प०ध प ध०स*रिमपधपधप-

मगरि०स०मपधपमधपमगरि०म०धस ।

रि०रिपम ग रिस०रिगरिगरि०-

स०धसरि०प ध पधपधमम ग रि०स०रि ॥ ७३ ॥

गारगरिस॰ (२) पूर्वगौडः

पधस ग०मप०धनिधप०मग०मपधपम० ।

गरिसस*स सग०मप०स०निध-

पम०गमपधप०मग०रिसग०रिस॰ ॥ ७४ ॥

(३) देशीकार सगम०धप-

मम०ग०रिनि स॰सगम० धपध मपध०म०ग ।

रि०स॰ सगम०प०ध०म०प०पमप-

धनि० स० गरिनिधप धम०प० मपध ॥ ७५ ॥

नि०स०रिनिधपधम०प० सनिध-

पधम०प०गम०पसगम०निधम०गरिनि स* ।

प०ध०म०प०प मपधनिस ग रि-

निध०प०ध०म०प०पमपधनि सनिध ॥ ७६ ॥

प०ध०म०प०सनिधपध०मप०स-

ग म नि धमग०रि०नि००सरि ग धपमग०रिस ।

(४) शुद्धवराटी रिमरिम-

पध पधमपधनि०स०ग रिनिधप ॥ ७७ ॥

धध प म गरि०ग म निधनिध-

म ग रिनि स*ग म नि ध निधमग रिम ग रि ।

स*ग म निध प म ग०रिग०रिस०-

स०ग रि स नि प०नि०स*रिमरिमपध ॥ ७८ ॥

धम०पध नि सनिधपधम०प-

धनि०सग रिरि रि नि ध ध ध प म ग रि०पम ।

ग रि०गरि रि स नि० ग रिस०रि०स*-

इति मध्याह्ने गातव्याश्चत्वारो रागाः ।

---

(१) बहुली सरिसरिगपग०पधस० ॥ ७९ ॥

सधपगरि०स*सरिसरिग०ध-

पग०पधस० सरि ग प ग रिस रिनि० स सध ।

पगपध ध प ग प रि ग स रि-

नि स सधपगपध ध ग रि ग स रि ॥ ८० ॥

नि०स सधपगपध स रि स रि-

नि० ससधपगपध ध स सधपगरिस*ल ।

रिगधपगरि ग प गरिसरि-

नि०स*गप०पपधध०ध रि०नि०ससध ॥ ८१ ॥

पगरिसप०गपगपसपग-

रिसरिसरिगपगपधस*ध०रि० सरिस ग ।

रि स रि स गरि सरि स गरिस-

रि सधपधधसधपगपगधप ॥ ८२ ॥

गरिपगरिगरिपगरि गरि-

पगरिगरिपगरिगरिसरिनि स०स सु स* ।

धनि०० गरिस रिसनि० स सनिध-

प०मग०ग०रिसरि०स*सरिगमप०पध०सरि ।

स ग गरि सरि स नि ध प०प ध०-

रिस रि स नि ध प०प ध०निपधप०म ॥ १०९ ॥

ग०ग०रिसरि०स०सनिध०प ध०स*

(४) श्रीरागस्तु रिमप नि स निधपमग ।

रि०मप०रि०पमगरि०मग०रि०स*

रिरि०मम०पप०निनि०स०निसरिरि० प ॥ ११० ॥

म ग रि०म ग रि०रि० स स रि स रि-

निसनि रिसनिधपमगरि०रिमप०नि० स० रि ।

ग रिसनिधपमगरि० रिमप०-

नि स निधपमगरि० रिमप०नि ध प ॥ १११ ॥

पनिधपमगरि मप०स०निध-

पमगरि०मप०रि०मगरि०मगरि०रि०स*रि ।

मरिमप०निपनिस०प०रि स रि-

स रिसरि सरि सनिप मरिमरिम ॥ ११२ ॥

पनिपनिस० सस स*नि स रि नि-

स रि पमप ध पप म रिरि स नि स०रिस ।

नि प मनि०स*रि म प०नि ससनि-

धपमम०रिरिस नि प०पमप०नि०स* ॥ ११३ ॥

रिमपधधधनि स निनिधध-

पपमपमरि०प ध प मरि रि०रिमप नि०स ।

रि० प ध पपपमगरि० मरि० स-

स निधपमरि०पमग रि०पमगरि० ॥ ११४ ॥

मगरि० रि०स नि०स०*रिमपध०ध-

पधम०पधधपधम-पपम प प म प म ।

पमगरिपमगरिरिमपनिऽ०

सरि० रि स नि धप मपम रि० पधप ॥ ११५ ॥

मगरिरि स निऽ० ससप* (५) मालव-

गौडोऽथ नि सरि०पमरिमपधरि रि रि ।

स रिस नि सुसनिमपस स स-

नि०पमरिगगरिग म मरि०ससरि ॥ ११६ ॥

स नि स०गरिगम०सरिसगरि०-

स०रिसरिस नि स०ध०नि निध नि स स०नि निस ।

रिपमपगम०रि०गगरिग म-

प०मध ध पध निधपमपग म०रि० ॥ ११७ ॥

गरि ग मप०म ध धप प धम-

पमधपमप गम०रिप०मप गम०रि ग ग ।

रि ग ममरि०स०रिसरि स नि०स०-

प०नि निप नि०स* नि सरि०प०मप०रिम० ॥ ११८ ॥

सरिसम रि०सरि०नि०स* नि सरि०-

पमरिमपस सनिपम०रिमपनिपनिम ।

पम निपम०रिपमपरिमस-

रिसम०रिस०रि०नि निस*प०रि०सरिस ॥ ११९ ॥

रिसरिसरिसरिमरिमपप-

मरिमरिमपनिपनिस* (६) अथ गौडोऽयम् ।

सरि०प म० ग रि ग मरि०स*सप-

मपगम०रिगम०रि०स*रिगमग रि ॥ १२० ॥

ग०रि०स०रिगम ग रि०स०[illegible]०स०-

निरि० स धनिध०[illegible] नि०रिग०धपमगरि ।

गरि०ज*मप ध०रि स[illegible]

सधप०गम प ग प[illegible] रि०ग०रि०स* ॥ १२१ ॥

निसनिरि०स*गमप०स सुनिध-

पगमु प०ग मगरि०स*गमप० सनि ॥ १३९ ॥

ध सनिधप०ग मु प ०गमग रि०-

स*गम प धनि स निध प ०म ग ०ग गपुम ग० ।

मगरि स०निसनिग० रि०स*गम-

प०स नि ध प० म ग० रि स०निसग० रि स* ॥ १४० ॥

अयमेवमेव रूपैः

कैश्चिन्ल्लारिमेल उद्धार्य ।

(६) तदनु विहङ्गड इत्थं

रिमम०मपमपनिधपमपम०० ॥ १४१ ॥

रिसनिस* रि पमपमु०ग०रिस-

निप०पनिसनिसरिमगु० रि ससनिस*सरि ।

सुरि मगु० रि ससनिस*रिमुम०

ग रिगरि०पमगु० रि सनि०स०रिपम ॥ १४२ ॥

ग०रिसनि०स*पनिसनिस०रिप-

मगरि सनि०स*रिमुम०पधनिधु०प०म गम० ।

ग रिगरिपमग०रि ससनि०स*

रि पम ग०रिसनि०स०निध पनिनि०स* ॥ १४३ ॥

इति निशि गातव्याः षड्रागाः ।

---

(१) शुभकृदथ मालवश्री-

निधम०पम०ध नि सनिग रि गनिधनि स स ।

स म ग सरि गस निधनि सनि

धपप पनिधगग०म०मग०स*गरि ॥ १४४ ॥

ग म नि धनि ध ममग०रिस* प

मग०रिस०स०गम प०ग०रिस०स०गम०

स०० ग०रिस*पनिस०नि निधप०

म पमग०रिसस०सगरि ग म० ग०रि० ॥ १४५ ॥

गमनि ध नि ध ममग०रिस॰प-

म प०मग०रिस०स०गम प०मग०रिस०सगम० ।

सम० ग०रिस*पनिस०प स०नि नि-

ध प०म प मग०रिस०सगरिग म०ग० ॥ १४६ ॥

रिस* प म प सनिधप० प म प-

नि ससनिधप० प म पनिधनिस सनिधप० ।

प मपमगम०मगरि ग म नि-

धनिधप मग०रिस०गपम ग रिस* ॥ १४७ ॥

(१) धवला सगमप० म गम०ग०-

रि स नि०सगमगमपमप ग०रिस नि० स* ।

गमपनि स स०ग०स नि स निध-

पमग०ग०मगगमप०मगरि सस* ॥ १४८ ॥



स ग म प०पम मप० प म ग० रि-

स नि०सरि म ग०ग म प म०निधपम०पमग० ।

रि स०*स म ग०रि सनि गमग म-

पमप म ग०गम नि ध पम ग०रिस ॥ १४९ ॥

(३) एषा तु मुखारी सस-

धधस रि मम० प नि धपमधपमग०रिस* ।

ग रि ग मपध पमगरि०सनि-

स०रि ग म पम गग० रिरि० सनि निस* ॥ १५० ॥

(४) रामक्रीगप० धरि स स-

रि गऽ०ग० रिस०रि सनिधप०धप०प०मग०*ग प० ।

ध स०स सनिधप० ध पप०मगऽ०-

रिस०*रि०ग०धपमपमगऽ०रि स०रि०स० ॥ १५१ ॥

स० सनि०ध प० म पधधप पध०-

धप म०ग०रिसध०रि०स०निधधपम०पधस॰ ।

मपध सस०नि स रि ग०रि० स०ध०-

रि०स०निधप०म पधरि०स०सनिधप० ॥ १५८ ॥

मपध स सनिधप० म प धध-

प म०प पमग०ग०ग०रिस* मपध०स०सनिधप० ।

मपध० सनिधप मपध० रि स-

निधपम० पनि ध पम०गरिसरि०स ॥ १५९ ॥

रिगरिमप धध प प ध००धप-

म०ग० ग०रिस॰पपपपमप०म० ग रि०म प० म० ।

ग० ग० रिस॰ममममपपधध-

स स स सनिधपम०प०म०ग०गरिस॰ ॥ १६० ॥

रिमपध०प०मप०रिपमम-

म० रिरिस०रि००स॰रिमपधधपप०सनिध प ।

म रि०धध प० मरि०धप मरिरि०-

सनिधपमम०रिरिस०रि०.स॰दिगियम् ॥ १६१ ॥

(८) देवादिकगान्धारे

रिमप०ध०प०म० ग रि०स०रिम० ग रि०स॰ससरि० ।

मप०पप०ममधप म०ग रि०स॰

रिमप० धस०रि० स नि ध०प०म०ग रि०स* ॥ १६२ ॥

सरि० म पपप म म धधपध-

प म०मगरि०स॰रिमप०ध०स रि म म० ग रि०स० ।

स निधध स०नि०रि स नि धप०म०-

गरि०स स निधधस०नि०रिम गरि स॰ ॥ १६३ ॥

(९) मारविका गमप०म०ग००म-

, प०निधपमग०स॰गमप०स० सनिधपमग० ।

मप०मु०निधपमग०स* निपध-

म०मपुनिध०प मग०स०म०प०म ग०स* ॥ १६४ ॥

गमपधनि ध ध स सुनिधप-

म०ग०*मपुम०प ध पुम ग०ग०स* पनि००सगम ।

पमम गु ०पमनिपम०ग०स*ग-

मपम०ध०पम०मपनिप०म ग ग स* ॥ १६५ ॥

(१०) परजो गमपध०ध०पधप-

पनिधप०धप०पग०रिस*गमपध०पध०स०

म० ग०रिस०निधप०धम०पग०म०-

गरिग०म०ग०रिगरिरिमग०रिसस* ॥ १६६ ॥

इति सर्वदा गातव्याः दशरागाः ।

---

रूपाण्येवं मध्यप्राधान्याद्दर्शितानि यान्येव ।
मन्द्रे तारे च यथासंभवमिलि वादनयानि ॥ १६७ ॥

इति वादनस्य परिभाषा ।

---

उक्तं रूपमनेकं तत्तद्रागस्य नादमयमेवम् ।

इति रागाणां नादमयरूपाणि ।

---

अथ देवतामयमिह क्रमतः कथये तदेकैकम् ॥ १६८ ॥ 168

गलराजिकमलराजिर्भाले भसिती रतः सदा नृत्ये ।
सुन्दरगौरः शोणाम्बरधरणः शंकराभरणः ॥ १६९ ॥

वेलावली विनीला तालीवनचारिणी तरलहारा ।
तरुणान्वेषणकरुणं करतलधुतहलाभरणा ॥ १७० ॥

दोलालोला विपिने तरलितवलयं विभूष्य भूपाली ।
कान्ते प्रतितात्यन्तं कुङ्कुमपीता स्मराद्गीता ॥ १७१ ॥

नीराजयत्युमेशं दीपैरनिशं निशात्यये ललिता ।
विविधालंकृतिमिलिता ललितश्वेताम्बरा गौरी ॥ १७२ ॥

केशगकिंशुक एष प्रवेशिताम्राङ्कुरः पिकस्य मुखे ।
अरुणवसनो वसन्तो गौरसुवेषो रसालगतः ॥ १७३ ॥

मालामशोकचम्पककमलानामुद्वहन्महाभूषः ।
ललनान्दोलितदोलालोलो हिन्दोलको गौरः ॥ १७४ ॥

कुटिलो ललितो ललितो विख्यातयातो विनीततां नटयन् ।
निह्नुतपररतिचिह्नो गदति वधूं चटु पटुः खिन्नाम् ॥ १७५ ॥

एषा माथुरवेषा विशेषपटुकटुद्देशभाषाभृत् ।
स्वेशे मदनावेशं करोत्यलेखैर्न जैताश्रीः ॥ १७६ ॥

दूर्वाभविम्बा विरहासहा लिखन्ती पटे पतिं रुदती ।
स्नपितकुचा सितगल्ला स्थिरधम्मिल्ला धनाश्रीः स्यात् ॥ १७७ ॥

डमरुत्रिशूलधारी पन्नगहारी सितो लसद्धसितः ।
धृतशशिगङ्गोऽतिजटोऽजिनिविकटो भैरवोऽसमदृक ॥ १७८ ॥

तनुगौरी पौरविकाऽऽयतवेणीमिलितकञ्चुकीबन्धा ।
दोलान्दोलनलोला नीलनिचोला मधौ मुदिता ॥ १७९ ॥

कलितविपञ्ची विपिने लालितहरिणाऽरुणाम्बरा हरिणी ।
धवलाङ्गरागरचना मृदुवचना भूषिता तोडी ॥ १८० ॥

आयतनीलनिचोला करमालाजप्यमानपतिनामा ।
विरहातुरोच्चगौरी तुरुष्कतोडी महावेणी ॥ १८१ ॥

नीलो घनान्तरालोल्लसितः पीताम्बरो वरो वीरः ।
मृदुहसितोऽतिपिपासितचातकपोष्येव मल्लारिः ॥ ८२ ॥

नटमल्लारिरनीलो नृत्यन्कुतुकेन नर्तयञ्शिखिनः ।
कलितकदम्बो ललितो मिलितालिः सौरभात्सहजात् ॥ १८३

पलितकचाहितबर्हः सकुटजमालो धनुःशरौ कलयन् ।
गोण्डः किरातवेषो गैरिकरेखोचितोऽलिनिभः ॥ १८४ ॥

तरुणोऽरुणवसनयुगो हरपूजामम्बुजस्रजा रचयन् ।
कमलदृगुत्तमवेषो विधुमधुरः पूर्वगोडोऽयम् ॥ १८५ ॥

मणिमयमुकुटो हारी विचित्रवासा लसन्गतावलसः ।
अरुणः कृपाणपाणिर्देशीकारः सरोजाक्षः ॥ १८६ ॥

तरुणी वने सकरुणं गवेषयन्ती पतिं भृशं गौरी ।
नीलाम्बरा वराटी सुरतरुकुसुमोल्लसत्सुषमा ॥ १८७ ॥

श्यामा चलधम्मिल्ला तन्वी ताम्बूलिनी सुकञ्चुकिका ।
बहुलीलेयं बहुली विलोलचैलाञ्चला सुगतिः ॥ १८८ ॥

पीताम्बरोऽसिततनुर्ललितालंकृतिरुपेतचापेषुः ।
सारङ्गो गरुडाङ्कोऽम्बुजकम्बुगदारिधारिकरः ॥ १८९ ॥

इन्दीवरतनुरच्छत्पीतदुकूलो मणिस्फुरन्मुकुटः ।
नटनारायण उच्चैः कुण्डलललितो मुदा नृत्येत् ॥ १९० ॥

भासुरतनुरनुगतसुरतरुसूनाऽनूनसौरभा सुमुखी ।
देवकृतिरतुलभूषा मणिमयसिंहासनासीना ॥ १९१ ॥

चित्राम्बरातिगौरी मेचककञ्चुकिकयाऽतिगूढकुचा ।
शोणरदा विधुवदना मदनार्ता याति सौराष्ट्री ॥ १९२ ॥

क्षीरोदभासिवासाः सहजसुहासा प्रलम्बबाहुलता ।
करधृतसाहिच्छत्रा गौडी गौरी सरोजाक्षी ॥ १९३ ॥

श्रुतिकृतरसालवल्लरिरुणाम्बरगौरतनुरभीष्टवना ।
पिककलगलरवचित्ता वित्तहरा कीर्तिता चैत्ती ॥ १९४ ॥

यावकयुक्करचरणा बह्वाभरणा कृतेशहृद्धरणा ।
दूर्वाभतनुरखर्वा चार्वी बहुगर्विता पूर्वी ॥ १९५ ॥

कदलीमूलासीना पीनकुचाऽधीननायका तन्वी ।
कनकनिभा शुभहारा त्रावणिका वर्ण्यवेणीका ॥ १९६ ॥

पीतांशुका सुकेशी शितिः स्मरन्ती पतिं भयाकुलदृक् ।
पिकनादेन विदूना कामोदी कानने रुदती ॥ १९७ ॥

खेटककृपाणपाणिः प्रतर्जयन्वैरिणो रणेऽरुणदृक् ।
हरितालाभो हारी हयचारी धीरधीर्नाटः ॥ १९८ ॥

गौरश्यामाऽऽभेरी विनीलचैला सविद्रुमालिगला ।
ताटङ्काञ्चितकर्णा मृदुतनुवाणी सुवेणीभृत् ॥ १९९ ॥

सच्छत्रचामरोऽच्छस्ताम्बूली मौलिरत्नमालावान् ।
कल्याणः सितवासा राजा सिंहासनासीनः ॥ २०० ॥

कनकातपत्रमूले लोलदुकूले गजाश्रयो राजन् ।
श्रीरागोऽखिलभोगो नीरजराजिं भजन्मौलौ ॥ २०१ ॥

कान्ताचुम्बितलपनश्चलमौलिः किमपि कुण्डली शुकभाः ।
नर्तनशालाशीली मालाभृन्मालवो भसः ॥ २०२ ॥

कुङ्कुमकुसुम्भजाम्भः कणकीर्णसिताम्बरः परं सुरभिः
मृगमदतिलकी ललितो मालाताम्बूलवान्गौडः ॥ २०३ ॥

सासिगजदन्तपाणिर्नीलगलो मीनभूषितः कर्णे ।
शृङ्गारवीरवेषी कर्णाटो योषितामिष्टः ॥ २०४ ॥

कुटजस्रजा विराजन्कुन्तीकृतकेतकस्फुरब्भकरः ।
अड्डाणो घनवर्णो रमते रतिसंगरे नितराम् ॥ २०५ ॥

हारी गौरोऽरुणदृग्धिमसितवसनोऽच्छपाटलोष्णीषः ।
छायानाट पराख्यः सुवर्णनाटो भटो रसिकः ॥ २०६ ॥

रसिको युवा सहासोऽरुणवसनो दण्डकन्दुकी कुतुकी ।
ताम्बूलरुची रुचिरो गौरो वीरस्तु हम्मीरः ॥ २०७ ॥

जटिलोऽहियोगपट्टः सविधुशकलमौलिरुल्लसद्भसितः ।
गङ्गाधरस्तपस्वी ध्यानरतोऽतीव केदारः ॥ २०८ ॥

विधुकरगौरः सुरभिः सुमनः कृतभूषणाम्बरेषुधनुः ।
विरहिजनमनोमोही विहङ्गडः कीरवाही सः ॥ २०९ ॥

तन्वी रसालतलगा कलगाना सस्मिता प्रति स्वपतिम् ।
मृगदृक्करगतकमला मालाश्रीर्माल्यिोल्लसिता ॥ २१० ॥

धृतनीराजनपात्रा सुन्दरगात्राऽधिमङ्गला धवला ।
पीताङ्गरागवसना चलरशना सुदशना गौरी ॥ २११ ॥

श्यामा कामाक्रान्ता कान्तवियोगासहा मुखारीयम् ।
मणिमयसुकुचावरणा वीणापाणिः प्रवीणोच्चैः ॥ २१२ ॥

काञ्चनविभाऽतिभासुरभूया नीलांशुकाऽधिकं रम्या ।
रामकृतिरणु वदन्ती सुदती दयितेऽन्तिके याते ॥ २१३ ॥

गोपालवेष एष क्वणयन्वेणुं सदा मुदा क्रीडन् ।
चित्राङ्गरागभावः पावकस्रगोऽसितो ललितः ॥ २१४ ॥

उच्चतनुस्तनुरतनुर्जघने शोणांशुका त्रिशूलाङ्का ।
गौरी करिगतिरभिमतयुद्धा सैन्धव्यतिक्रुद्धा ॥ २१५ ॥

चलकदलीदलमौलिर्मलयाचलगा कलक्वणन्मुरली ।
आसावरी सकरुणा वर्हाली शालिनी नीला ॥ २१६ ॥

सिंहासनोपवेशी भूपाभिर्भासितः सितः कुमुदी ।
धवलाम्बरः सुरनुतः शृङ्गारी देवगान्धारः ॥ २१७ ॥

इन्दुमुखी कनकाभा दीर्घा लम्बालकाऽतुला चलदृक् ।
अरुणाम्बरा नृपवरांस्त्वरयन्ती मारवी समिते ॥ २१८ ॥

परज इषुधनुर्धारी हारी गौरस्तनुस्तनूदीर्घः ।
मिथ आहततालवधूशाली स्तवनेन शालीनः ॥ २१९ ॥

इति रागाणां देवमयरूपाणि ।

---

रागेषु देवतात्वे नाशङ्क्या कापि देशजा रीतिः ।
स्पृशती भाषावेषौ तेषां देशाधिदैवत्यात् ॥ २२० ॥

इति देशजारीतिः ।

---

इति केषांचित्तेषां कतिचन रूपाणि तानि चैतानि ।
नादात्मान्यखिलानि ब्रह्मगुणवदगणनीयानि ॥ २२१ ॥

इति नाददेवान्तरम् ।

---

बालिशबोधोपायो मया कृतो दक्षपूर्वपक्षोऽयम् ।
युक्त्या निजया सुजनैस्तथाऽपि सिद्धान्ततां नेयः ॥ २२२ ॥

